शिवात्मकम् । अस्य प्रदानाद् ब्रह्माद्याः शिवं ददतु पुष्कलम् । ताम्बूलस्य ॥ पूरितं पूगपूगेन नागवल्लीदलान्वितम् । चूर्णेन चूर्णपात्रेण कर्पूरपिटकेन च ॥ सपूगखण्डनं दिव्यं गन्धर्वाप्सरसां प्रियम् । करक त्वं निरातङ्कं त्वत्प्रसादात् कुरुष्व माम्, ताम्बूलकरण्डस्य ॥ लक्ष्मीप्रिया च लक्ष्मीदा लक्ष्मी च वसनप्रिया । सौभाग्यकृद्वरस्त्रीणां हरिद्रा श्रीप्रदाऽस्तु मे, हरिद्रायाः ॥ जरा नो जायते यस्मान्मण्डनं शुभकर्मसु । तस्माज्जीरकदानेन प्रीयतां गिरिजा मम, जीरकस्य ॥ कञ्चुकीवस्त्रयुग्मैश्च तथा कर्णावतंसकैः । कण्ठसूत्रैश्च भूषाभिः प्रीयतां निमिनन्दिनी, सौभाग्यद्रव्ययुक्तशूर्पस्य ॥ रामपत्नि महाभागे पुण्यमूर्त्ति निरामये । गृहाणेमानि शूर्पाणि मया दत्तानि जानकि, शूर्पस्य ॥ नवग्रहदक्षिणादानमन्त्रा मात्स्ये । कपिले सर्वभूतानां पूजनीयाऽसि रोहिणि । सर्वतीर्थमयी यस्मादतः शान्तिं प्रयच्छ मे इति ॥

इति श्रीजगद्गुरुभट्टनारायणसूरिसूनुपण्डितशिरोरत्न-
मीमांसकशङ्करभट्टात्मजभट्टनीलकण्ठकृते
भगवन्तभास्करे दानमयूखः
षष्ठः ६ संपूर्णः ॥
शुभमस्तु ॥